निरयद्वारमन्यतमानारम्भो दुर्दैवानाम् ॥ १९ ॥

निरयेति । अन्यतमानारम्भोऽन्यतमस्य ज्ञानोपासनाकर्मसु स्वाधिकृतकाण्डस्यानारम्भोऽननुष्ठानम् । निरयद्वारं नरकमार्गः । केषां दुर्दैवानां दुर्भाग्याणाम् । तथा च निरुक्तकाण्डत्रयान्यतमबहिर्मुखाणां न शुक्लगतिर्नापि कृष्णगतिः किंन्वशुभा तृतीया गतिः श्रूयते । यथा—अथैतयोः पथोर्न कतरेण चनेति । अत एव दुर्दैवानामित्युक्तम् ॥ १९ ॥

शास्त्रार्थमुपसंहरन्नस्य महिमानं दर्शयति—

स्वाध्यायो धियमुत्प्लावयति निसर्गादुत्प्लावयति निसर्गात् ॥ २० ॥

इति चतुर्थे ज्ञानपाठे चतुर्थः प्रपाठः ॥ ४ ॥

---

इति वैयासिके सिद्धान्तदर्शने वेदान्तविज्ञाने परापरतत्त्वनिरूपणे चतुर्थो ज्ञानपाठः ॥ ४ ॥

---

स्वेति । स्वाध्यायः स्वस्य सिद्धान्तशास्त्रस्याध्यायोऽध्ययनम् । निसर्गात्स्वभावाद्धियं बुद्धिमुत्प्लावयत्यूर्ध्वं गमयतीत्यर्थः । तथा च—एतच्छास्त्राध्ययनं निसर्गादेवाध्येतुर्बुद्धिं सपदि कालान्तरे वाऽधिकमीषद्वा लक्ष्यमलक्ष्यं वा कथंचिदूर्ध्वमवश्यं गमयेत् । तेन जन्मान्तरं कुशली कुर्याच्चेति भावः । द्विपदद्विरुक्तिः शास्त्रसमाप्तिं द्योतयति । एतन्नये निर्णीतानां पदार्थानां परिशीलनमर्थतो भगवच्चिन्तैव । ब्रह्मविवर्तरूपत्वोक्तेर्विश्वस्येति मनस्विनां हृद्यम् ॥

शास्त्रशीर्षमिदं गुप्तं काले व्यक्तं महामुनेः ।
मत्वा मातुः प्रसादेन व्याख्यातं जाड्यनुत्तये ॥
ब्रह्मण्यादौ वासिष्ठेऽथ तत्सुतेऽसौ चतुःशती ।
शक्तौ पराशरे पश्चाद्वेदव्यासेऽस्फुरत्ततः ॥
श्रुतिस्मृतिपुराणानां त्रयाणां सह युक्तिभिः ।
संमतं यदतो मानं प्रबलं भुवि किं पुनः ॥
अत्र कोऽनुपयोगोऽस्ति सर्वा संगतिवारिणी ।
विचित्रकारिणी शक्तिर्योगमायोद्धृता यतः ॥
परतत्त्वं यदत्रोक्तं श्रुत्या केवलया न च ।
युक्त्या वा किंत्विहोत्तीर्णं विद्वदनुभवादपि ॥

तार्किकतृणवातालिः सांख्यकुञ्जरकेसरी ।
वेदान्तशेषसिद्धान्तो *महान्तोऽयमुपास्यताम् ॥
बाह्यविज्ञानसोपानमन्तर्विवेकशेखरम् ।
विदित्वैनं महामन्त्रं मनस्तत्त्वे निवेश्यताम् ॥
क्रीडन्तो भवकान्तारे रे रे जीवविहंगमाः ।
सिद्धान्ततरुमारुह्य पीयतां फलपञ्चकम् ॥
गौरनीलतनुः पायादपायात्सुतवत्सला ।
अमेयाऽपि कुले क्वापि या विरेजे यदृच्छया ॥

इति चतुर्थे ज्ञानपाठे चतुर्थः प्रपाठः ॥ ४ ॥

इति वैश्वदेवे भाष्ये निरञ्जनाख्ये चतुर्थो ज्ञानपाठः ।

समाप्तमिदं निरञ्जनभाष्यसमेतं सिद्धान्तदर्शनम् ।

ॐ तत्सद्ब्रह्मार्पणमस्तु ।

आबाल्याद्ब्रह्मचारी विबुधपरिचितः सच्चिदानन्दनाम्ना,
जातो रत्नाकरस्य प्रथिततमतटे यो महाराष्ट्रदेशे ।
दिव्ये दैवात्कुतश्चित्प्रतिवसति नवद्वीपधाम्नीव दीप-
स्तेनाऽऽनन्दाश्रमश्रीहरिनिकटमसौ प्रापि सिद्धान्तराजः ॥ १ ॥

पुण्यनगरभानुर्गुणसिन्धुर्जयताच्छ्रीहरिराश्रितबन्धुः ।
यत्करुणाकणया विरराज श्रुतिसिद्धान्तो दर्शनराजः ॥ २ ॥
शाके सिन्धुधनेभेन्दुमाने पूर्णेन्दुसंनिभम् ।
रेजे यन्त्राक्षरैर्दिव्यैर्दर्शनं चित्रदर्शनम् ॥ ३ ॥

---

* वेदान्तशेषसिद्धान्तो वेदान्तानामुपनिषदां शेषश्चरमः सिद्धान्तो मीमांसा यत्र सः । वेदान्तं शेषयतीति वेदान्तशेषः स चासौ सिद्धान्तश्चेतीति वा । महान्त इति संबोधनादेतदधिकारिणः शास्त्रोक्तगुणवन्त एव सूचिता इति वार्तिकम् ।